बलैरुपेता दशभिर्बलै स्थिता
असङ्गज्ञानी विदि सर्वधर्मान् ।
करुणानि लोकहितकर धर्मस्वामिन्
अनुकम्पसे प्रजा इमे[1] अर्थकाम ॥ ६ ॥

शून्य ति ज्ञान न च पुनिहास्ति सत्त्वो
N 182 लोक च दृष्ट्व[2] तथा ति प्रनष्टमार्गम् ।
विबोधितास्ते प्रकृतिनिरामधर्मे
विमुक्तिजाता न च कवि सा विमुक्ति ॥ ७ ॥

प्रत्यादिश जहिय सदा प्रमत्त
जित्वा च मार[3] सबलमनन्तसैयम् ।
बुद्धित्व बोधि विपुलामनन्तज्ञान
दिशेहि धर्म परम विशुद्धशान्तम् ॥ ८ ॥

गगन पतेय्या सह शशितारकेहि
पृथिवी विनश्येत् सनगरशैलसत्या ।
आकाशधातुरपि च सियान्यथात्व
नो चैव तुभ्य वितथ भणेय्य[4] वाचा ॥ ९ ॥

दृष्ट्वा त्व दु खितान् सत्त्वानुपलम्भरता प्रजा[5] ।
अनोपलम्भ देशेसि गम्भीरा शान्तशून्यताम् ॥ १० ॥

शिक्षितोऽसि महावीर कल्पकोटीरचिन्तिया ।
अनोपलम्भशिक्षाया स्खलित ते न विद्यते ॥ ११ ॥

यादृशो शिक्षितो धर्मे तादृशा धर्मु भाषसे ।
अभूमिरत्र बालाना यावन्त अन्यतीर्थिका ॥ १२ ॥

N 183 ये स्थिता आत्मसंज्ञाया ते स्खलन्ति अविद्दसु ।
ज्ञात्वा[6] धर्माण नैरात्म्य स्खलित ते न विद्यते ॥ १३ ॥

भूतवादी महावीर भूतधर्मप्रतिष्ठित ।
भूते सत्ये स्थितो नाथ भूता वाच प्रभाषसे ॥ १४ ॥

भूता ते चारिका आसीद् यथा ते प्रणिधि कृत ।
तस्य भूतस्य निष्पन्दा भूता वाच प्रभाषसे ॥ १५ ॥

भूतचर्यासु सपन्नो भूतकोटीसुशिक्षिता ।
भूताशया भूतचरी भूतप्रज्ञ नमोऽस्तु ते ॥ १६ ॥

---

१ A इमु for इम २ A om दृष्ट्व तथा ३ C ज्ञात्वा उदारं for जित्वा च मारं, ४ C भवेय for भणेय्य. ५ A °रतान् सदा for °रता प्रजा ६ C बुद्ध्वा धर्मा निरात्मान॰ for ज्ञात्वा धर्माण नैरात्म्य

समस्ते प्रज्ञया नास्ति ज्ञानवादि प्रभाकर ।
ज्ञाने विशेषतां प्राप्त ज्ञानवादि नमोऽस्तु ते ॥ १७ ॥
मित्रस्त्वं सर्वसत्त्वानां मैत्री तव सुभाविता ।
अप्रकम्प्यो यथा मेरुरचलः सुप्रतिष्ठितः ॥ १८ ॥
गणे सुविपुले शास्तुर्गुणान् संप्रकाशसि ।
गम्भीरप्रज्ञा सुगता नदसे परिषद्गता ॥ १९ ॥
सिंहनादं नदि बुद्धः सिंहविक्रान्तविक्रमः ।
जितास्ते तीर्थिकाः सर्वे सिंहेन क्रोष्टुका यथा ॥ २० ॥
अदान्तदमको वीर अदान्ता दमितास्त्वया ।
ते च मित्रा दृढा भोन्ति अभेद्या भोन्ति सुस्थिताः ॥ २१ ॥ N 184
दृष्ट्वा त्वं दुःखितान् सत्त्वानात्मदृष्टिसमाश्रितान् ।
नैरात्म्य धर्मं देशेसि यत्र नास्ति प्रियाप्रियम् ॥ २२ ॥
अशिक्षितानां बालानां कुमार्गपथचारिणाम् ।
मार्गं त्वं संप्रकाशेसि येन गच्छन्ति नायकाः ॥ २३ ॥
ये स्थिता आत्मसंज्ञायां दुःखे ते सुप्रतिष्ठिताः ।
न ते जानन्ति नैरात्म्यं यत्र दुःखं न विद्यते ॥ २४ ॥
अखिलितपदधर्मदेशकोऽसि
स्खलितु न लभ्यति लोकनाथ ।
अचिन्तिय गिर संप्रभाषसे त्वं
दुःखमोक्षकरा नमस्ते नाथ ॥ २५ ॥
बहुनियुतशता सहस्रकोट्यो
गगनस्थिताः पृथु देवनागयक्षाः ।
सर्वि स्पृह जनेन्ति नायकस्मिन्
भावतु वाच शृणित्व अर्थयुक्ताम् ॥ २६ ॥
स्निग्धमृदुमनोज्ञकाव्ययुक्तां
सुमधुर वाच प्रणीत प्रेमणीयाम् ।
अपरिमितस्वराङ्गसंप्रयुक्तां
हितकर मोक्षकरीं बहुजनस्य ॥ २७ ॥ N 185
तुरियशतसहस्र अप्रमेया
सुमधुर युक्त मैत्रियुक्तकाले ।

१ A गगने विपुले for गणे सुविपुले. - २ C सर्वान् for सत्वान्. - ३ A अस्खलिते पदे धर्मं देशकोऽसि for the line. ४ A भणेयु. for भवेयु.

दिव्यस्वर विशिष्ट प्रेमणीया
अभिभवति सुगतस्य एकवाचा ॥ २८ ॥

द्विजगणकलविङ्कमञ्जुघोषा
सुरुचिर प्रेमणीया सुगीतशब्दा ।
शङ्खपटहभेरिवीणशब्दा
कलमपि नैं क्षमन्ति बुद्धशब्दे ॥ २९ ॥

परभृतशुकशारिकाण शब्दा
स्तथ पुन क्रौञ्चमयूरकिन्नराणाम् ।
रुत रुचित य केचि प्रेमणीया
कलमपि बुद्धस्वरस्य नानुभोन्ति ॥ ३० ॥

प्रिय मधुर मनोज्ञ प्रेमणीया
सुमधुर शान्तगिरा प्रशासनीया ।
सर्वि गिर प्रयुक्त एककाले
गिरवर हर्षणियास्तथागतस्य ॥ ३१ ॥

सुरमनुजनरेन्द्रदानवाना
सकलभवे त्रिभवे य अस्ति सत्त्वा ।
N 186 या प्रभा अभवत् प्रभाकराणा
अभिभवति सुगतस्य एकरश्मि ॥ ३२ ॥

कुसुमितु सुगतस्य आत्मभाव
परिवृतु विचित्रु सर्वलक्षणी ।
पुण्यशतनिर्वृतु अच्छ शुद्ध
प्रतपति सर्वजगे जिनस्य काय ॥ ३३ ॥

शङ्खान शब्द पणवसुघोषकाणा
भेरीण शब्द तथपि च किम्पलानाम् ।
सर्वे च शब्द सुमधुर प्रेमणीया
बुद्धस्य शब्दे शतिम कला न भोन्ति ॥ ३४ ॥

तूर्याण कोटिनियुतसहस्रशब्दा
आस्वादनीय सुमधुर दिव्यकल्पा ।
प्रामोदनीय मरुगणअप्सराणा
बुद्धस्य शब्दे शतिम कला न भोन्ति ॥ ३५ ॥

---

१ T 'कोकिल' for 'कलविङ्क' २ After शब्दा, C adds अपिप्रेमणिया स्वरा कुणाला सर्वे हिमाल घोषेन्ति शब्दे ३ C नानुमेन्ति for न क्षमन्ते ४ C विचित्रु for विचित्रु

क्रौञ्चा मयूर परभृत चक्रवाका
हंसाः कुणाल बहुविधपक्षिसंघाः।
ये ते सशब्दाः सुमधुर एककाले
बुद्धस्य शब्दे शतिम कलां न भोन्ति ॥ ३६ ॥ E N 187
नागान यक्षाण असुरमहोरगाणां
देवेन्द्रब्रह्ममरुपतीनां च शब्दाः ।
यावन्त शब्दास्त्रिभवे मनोज्ञ कान्ता
बुद्धस्वरस्य कलमपि ते न भोन्ति ॥ ३७ ॥
या ब्रह्मणो वा मेरुपतिनथ आभा
प्रभास्वराणां मणिरतनान आभा.।
सर्वा य आभा विविधमनेकरूपाः
सर्वास्त एका अभिभवि बुद्धरश्मि· ॥ ३८ ॥
कायेन शुद्धो वचसा मनेन चैव
ज्ञानेन शुद्धस्त्रिभवि अनोपलिप्तः।
गुणसारराशि गुणरतनो नरेन्द्रः
सर्वगुणेहि असमसमः स्वयंभूः ॥ ३९ ॥
एवं स्तवित्वा दशबल सत्यवादिं
वाचं प्रभाषि मुदितमनः कुमारः।
पूजित्व बुद्धमतुल्यियमप्रमेयं N 188
बुद्धो भवेय यथ इव शाक्यसिंह· ॥ ४० ॥
तस्यो विदित्वा सुगतु विशिष्ट चर्या-
मसङ्गज्ञानी स्मितमकरोन्नरेन्द्र·।
मैत्रेयु पृच्छी दशबलज्येष्ठपुत्रं
कस्यार्थि एतं स्मितु कृतु नायकेन ॥ ४१ ॥
आकम्पिताभूद्वसुमति षड्विकारं
देवाश्च नाग गगनस्थिता उदग्रा ।
प्रेक्षन्ति बुद्धं प्रमुदित हृष्टचित्ता-
स्तं व्याकरोहि सुगत अनाभिभूतः ॥ ४२ ॥
अभूमिरस्मि भगवतु श्रावकाणां
यत्र प्रवृत्तं पुरुषवरस्य ज्ञानम्।
सुविशुद्धज्ञानिन्ननुपमप्रज्ञभूमि
अखिला ते स्मितु कृतु जिन कस्य अर्थे ॥ ४३ ॥

१ A मरुपतीनां च for °पतिनथ. २ C सुगतुमनन्तचर्या ३ C भवतु for भगवतु.

येष मैत्रि करुणा सुभाविता
सर्वप्राणिषु जगे अचिन्तिया ।
सत्त्वसंज्ञ न च येष वर्तते
तेष अर्थि द्विपदेन्द्र पृच्छियाम् ॥ ६० ॥

येष ज्ञानमतुल्यमचिन्तियं
तेष प्राप्त न कदाचि विद्यते ।
चित्तगोचरिय पारमिं गता
तेष अर्थि अहु नाथ पृच्छमि ॥ ६१ ॥

शीलज्ञानगुणपारमिं गता
त्र्यध्वज्ञानमतुलं भिवर्तते ।
नैव तुभ्य स्खलितूपलभ्यते
कस्य अर्थि स्मितु एतु दर्शितम् ॥ ६२ ॥

शारिपुत्र अनिरुद्ध कोलिता
ये च अन्य सुगतस्य श्रावकाः ।
N 193 नैवे तेष इह ज्ञानु वर्तते
बुद्धगोचरु अयं निरुत्तरः ॥ ६३ ॥

सर्वधर्मवशिपारमिं गताः
सर्वशिक्ष-चरियाय उद्गता.
संजनेत्व करुणां विनायका
मुख येष परमार्थकोविदा ॥ ६४ ॥

येऽपि पूर्व बहुकल्पकोटियो
एव चिन्ति द्विपदेन्द्र पूजित. ।
भव्यमस्तु शरणं परायणं
तेष अद्य फल ब्रूहि नायका ॥ ६५ ॥

यक्षराक्षसकुम्भाण्डगुह्यकाः
प्रेक्षमाण द्विपदानमुत्तमम् ।
सर्वि प्राञ्जलिस्थिताः सगौरवाः
श्रोतु व्याकरणमग्रपुद्गलात् ॥ ६६ ॥

बोधिसत्त्व बहवोऽद्य आगता
ऋद्धिमन्त बहुक्षेत्रकोटिभिः ।

---

१ C लभ्यते for विद्यते २ C नैष for नैव. ३ C संजनेत्तु for ° नेत्व. ४ A येहि for येऽपि

जेष्ठपुत्रे सुगतस्य औरसाः
सर्वि प्राञ्जलिस्थिताः सगौरवाः ॥ ६७ ॥

गन्धहस्ति पुरिमादिशा गतो- N 194
ऽक्षोभ्यक्षेत्र दिशि लोकविश्रुतः ।
बोधिसत्त्वनयुतैः पुरस्कृतः
शाक्यसिंहु द्विपदेन्दु पृच्छना ॥ ६८ ॥

सुखावतीय वरलोकधातुतो
महास्थाम प्राप्त अवलोकितेश्वरः ।
बोधिसत्त्वनयुतैः पुरस्कृतः
शाक्यसिंहु द्विपदेन्दु पृच्छना ॥ ६९ ॥

येन पूर्वे बहुकल्पकोटियो
अप्रमेय सुगता उपस्थिताः ।
सागराण समता च यालिका
एषता परम ज्ञानमुत्तमम् ॥ ७० ॥

सर्वबुद्धस्तुत संप्रशंसितः
सर्वधर्मगुणपारमि गतः ।
सर्वलोकदिशतासु विश्रुतो
मञ्जुघोष स्थितु प्राञ्जलीकृतः ॥ ७१ ॥

बुद्धक्षेत्रनियुतैश्चरित्वना
सुदुर्लभमीदृशकान दर्शनम् ।
बुद्धपुत्रगुणवत् सुशिक्षिताः
सर्वि प्राञ्जलिस्थिताः सगौरवाः ॥ ७२ ॥

नास्ति अन्य इह कश्चि भाजनं N 195
एवरूपि मथ एत सूरताः ।
धर्मकोशधर सर्वशास्तुनां
स्निग्धभाव गिर मुञ्च नायका ॥ ७३ ॥

न ह्यकारणक जिना विनायका
दर्शयन्ति स्मितमप्रपुद्गलाः ।
मुञ्च घोषवर दुन्दुभिस्वर
कस्य अर्थि स्मितु एतु दर्शितम् ॥ ७४ ॥

१ C °दृ for °पुत्र. २ A om. this line. ३ A C एवि सुरता for एत सूरताः. ४ A स्निग्धवाच for °भाव.

पृच्छमि दशबलं विनायकं
शाक्यसिंह द्विपदानमुत्तमम् ।
ज्ञानपारमि गतं प्रभाकरं
रागद्वेषखिलमोहसूदकम् ॥ ४४ ॥
कल्पकोटि चरितोऽसि नायको
गङ्गवालुकसमास्तनोत्तरम् ।
N 189 एषमाणु वरबोधिमुत्तमां
कस्य अर्थि स्मितु एतु दर्शितम् ॥ ४५ ॥
हस्त पाद परित्यक्त[1] शास्तुना
पुत्रदार प्रियज्ञाति बान्धवान् ।
एषमाणु वरज्ञानमुत्तमं
को नु हेतु स्मितदर्शने मुने ॥ ४६ ॥
अश्वहस्तिरथपत्तियो त्वया
दासदासिमणिरत्नरूप्यकम्[2] ।
नैव दृश्यरतन च लभ्यते
यत्र त्यक्तु चरता ति चारिकम् ॥ ४७ ॥
ज्ञानु श्रेष्ठु त्रिभवेऽतिवर्तते
सर्वसत्त्वचरिया प्रजानसे ।
धातुचित्तु अभिमुक्तिगोचरा
कस्य अर्थि स्मितु[3] एतु दर्शितम् ॥ ४८ ॥
केन पूजित नराणमुत्तमा
कस्य वीर्य[4] विपुलो भविष्यति ।
N 190 को च अस्य चरियाय प्राहक
कस्य अर्थि स्मितु दर्शित मुने ॥ ४९ ॥
षड्विकार पृथिवी प्रकम्पिता
पद्मकोट्य धरणीतु उत्थिता ।
कोटिपत्रपरमा प्रभास्वरा
हेमवर्णरुचिरा मनोरमा ॥ ५० ॥
यत्रिमे स्थित जिनस्य औरसा
बोधिसत्त्व परमा महर्द्धिका ।
धर्मभाणक बहू समागता
स्तोप कारणिक पृच्छि नायकम् ॥ ५१ ॥

---

१ A परित्यक्त २ A °मणिमुक्ति° for °मणिरत्न° ३ C स्मितमेतु ४ A अर्थु for वार्य

भेरिशङ्खतुणवाः सुघोषका-
स्तूर्य कोटिनियुताः प्रवादिताः।
तेष शब्द गगनस्मि श्रूयते
यादृशः सुगतघोष अचिन्तियः ॥ ५२ ॥

हंसक्रौञ्चकलविङ्ककोकिलाः
पक्षिसंघ बहुकाः समागताः।
मुञ्चि घोष परमं प्रभास्वरं
बुद्धघोषकल नानुभोन्ति ते ॥ ५३ ॥

केन दान दम संयमः पुरे
कल्पकोटि बहुका निषेविताः।
केन पूजित नराण उत्तमा
कस्य अर्थि स्मितु एतु दर्शितम् ॥ ५४ ॥

केन पूर्वि द्विपदेन्दु पृच्छितो
गौरवं परमु संजनित्वन।
बुद्धबोधि कथमेव लभ्यते
कस्य अर्थि स्मितु एतु दर्शितम् ॥ ५५ ॥

यात्तिका दशबला अतीतका
प्रत्युत्पन्न सुगता अनागता।
सर्व जानसि नराणमुत्तमो
तेन पृच्छमि प्रजाय कारणात् ॥ ५६ ॥

चित्तसंतति प्रजाय जानते
सर्वि प्राणिन अनन्तगोचराः।
यस्य यादृशु नरस्य आशय-
स्तेन पृच्छमि नराणमुत्तमम् ॥ ५७ ॥

ये चरन्ति चैरियामनुत्तमा
हेतुयुक्तिविनयस्मि कोविदा।
बुद्धज्ञान कथमेतु लभ्यते
एतदर्थि द्विपदेन्दु पृच्छिहम् ॥ ५८ ॥

ये हि धर्म सुखुमा सुदुर्दृशा
शून्य शान्त अतुला अचिन्तिया।
भाविता दशबलान गोचरा-
स्तेष अर्थ अहु पृच्छि नायकम् ॥ ५९ ॥

१ C गगने हि for गगनस्मि. २ C स्मितमेतु almost everywhere ३ A चरियाणमुत्तमां for चरियामनुत्तमां. ४ C कारणम् for नायकम्.

हंसक्रोञ्चिमयूरसारसा
मेघनाद वृषभाः प्रगर्जिताः ।
दिव्यवाद्यमधुराः प्रवादिता
व्याकरोहि गिर सत्त्वमोचनी ॥ ७५ ॥

मैत्रसंजननि प्रेम[1]वर्धनी
ज्ञानदर्शनि अविवरि[2]घ्नी ।
अर्थतीरणि प्रज्ञाविवर्धनी
कल्पकोटिनियुता विशोधनी ॥ ७६ ॥

N 196 विनिश्चितभाववि[भा]वित-
दुःखनिरोधपदार्थनिदर्शनी ।
सर्वकुतीर्थकवादध्वंसनी
शून्य निसत्त्व निजीव विभावनि ॥ ७७ ॥

पुण्यसहस्रशतेहि अलंकृतः
बुद्धसहस्रशतेहि चरित्विह ।
देवसहस्रशतेहि सुसंस्तुतः
ब्रह्मसहस्रशतेहि नमस्कृतः ॥ ७८ ॥

राक्षसयक्षकुम्भाण्डप्रसादनि
नागसुपर्णमहोरगमोचनि ।
नित्यमसक्त-प्रयुक्त-उदीरणि[3]
धर्मफलेहि शुभेहि समुद्गतः ॥ ७९ ॥

ये च केचि जिनाः परिनिर्वृता
ये च अनागत ये च अवस्थिताः ।
सर्वि प्रजानसि सङ्घु न तेऽस्तीति
सर्वगुणेहि समुद्गत नायक ॥ ८० ॥

N 197 भूतन्धरा ससमुद्रपर्वत
सर्वि मही षड्विकार प्रकम्पिता ।
देवगणा नभि पुष्प क्षिपन्ति च
दिव्यु प्रवायति गन्धु मनोरमु ॥ ८१ ॥

हतरागदोषतिमिरा निष्क्लिष्टा
परिशुद्धशील परिशुद्धमनाः ।

---

१ C प्रीतिवर्धनी for प्रेम°. २ A अविवरजिनी. ३ C उदीरित for उदीरणि.

प्रशान्त शून्य अनिमित्तरता
नैरसिंहनादु नद कारुणिका ॥ ८२ ॥[1]
प्रतिभानवन्त सुविशालयशा
सुसमाप्तप्रज्ञ तथज्ञान जिना ।
तत्रै[2] लोकि नास्ति समु कारुणिका
भण कस्य आर्य स्मितु दर्शयसे ॥ ८३ ॥
कलविङ्ककोकिलमयूररवा-
स्तथ जीवंजीवे जीवकमनोज्ञरुताः ।
रञ्जनीय शब्दु भुवि एकक्षणे
कल तेन भोन्ति सुगतस्य स्वरे ॥ ८४ ॥
भेर्यो मृदङ्गपणवाश्च तथा N 198
शङ्ख सवेणु तथ वल्लरियो ।
तूर्यसहस्र सिय एकरवाः
कल नानुभोन्ति सुगतस्य रुते ॥ ८५ ॥
तूर्यसहस्र वर दिव्यरुता
रञ्जनीय गीत सिय अप्सरसाम् ।
सुगीति शब्दरति संजने
कल न भोन्ति सुगतस्य रुते ॥ ८६ ॥
एकस्वरा तु तव लोकहिता
नानाधिमुक्ति स्वरु निश्चरति ।
एकैकु मन्यि मम भाषि जिनो
ब्रूहि स्मितं ति श्रुतु कस्य श्रुते ॥ ८७ ॥
देवान शब्द तथ नागरुता
ये चापि किंनररुता मधुराः ।
प्रशमेन्ति क्लेश न कदाचिदपि
बुद्धस्वरास्तु सद क्लेशनुदाः ॥ ८८ ॥
प्रीतिं जनेति न च रागरतिं
मैत्रीं जनेति न च दोषमतिम् ।
प्रज्ञां जनेति न च मोहरतिं
बुद्धान सर्व मलनाशि स्वरः ॥ ८९ ॥ N 199
न बहि च शब्दु परिपातु प्रजा
सर्वेष छिन्दति स काङ्क्षशतान् ।

---

१ A नद सिंहनादु वर कारुणिका for the line. २ A न तत्रास्ति लोकि for तत्र लोकि नास्ति.

न च ओनतो न हि च औन्नमतो
समसीस्यदर्शन स्मरो मुनिनः ॥ ९० ॥
भज्यादियं मही सशैलवरा
क्षीयते सागरजलं च तथा ।
चन्द्रोऽथ सूर्यु धरणीं प्रपतेद्
गिरमन्यथा न पुन भाषि जिनः ॥ ९१ ॥
सर्वाङ्गयास्य परिशुद्धगिरा
सिंहस्वरा मधुरमञ्जुगिरा ।
ब्रह्मस्वरा सुगत चक्षणिना
भण कस्य अर्थि स्मितु दर्शयसे ॥ ९२ ॥
यावन्त सत्त्व इह सर्व जगे
सर्वेष चित्त चरते कुशलः ।
ये अतीतनागत ये सांप्रतिका
भण कस्य अर्थि स्मितु दर्शयसे ॥ ९३ ॥
N 200 यावन्त केचिज्जिन कारुणिका
ज्ञानस्मि सर्वि वशि पारमि गताः ।
न च ते जिना विमलचन्द्रमुखा
नैहैतुकं[1] स्मित सद दर्शयसे ॥ ९४ ॥
अपि कल्पकोटि भणि अप्रतिमा
यथ गङ्गवालिका भणेय्य गुणान् ।
न च शक्यु कीर्तितु प्रमाण गुणे
भण कस्य अर्थि स्मितु दर्शयसे ॥ ९५ ॥

इति श्रीसमाधिराजे स्मितसंदर्शनपरिवर्तश्चतुर्दशः ॥ १४ ॥

[1] C अहेतुकं स्मितकरो for नाहेतुकं स्मित सद.

## १५

## स्मितव्याकरणपरिवर्तः ।

अथ खलु भगवांस्तस्यां वेलायां मैत्रेयं बोधिसत्त्वं महासत्त्वमाभिः सारूप्याभिर्गाथाभिः प्रत्यभाषत— N 201

चन्द्रप्रभो एष कुमारभूतः
  संस्तुत्य बुद्धमतुलीय प्रीतिया ।
भाषित्व बुद्धान विशिष्ट वर्णं
  प्रशंसनीयः सद काले भेष्यति ॥ १ ॥
इहैव चो राजगृहस्मि पूर्वं
  दृष्टैव बुद्धान् सहस्रकोटयः ।
सर्वेष चानेन जिनान अन्तिके
  अयं वरः शान्तसमाधि पृच्छितः ॥ २ ॥
सर्वत्र चो एष ममासि पुत्रो
  इमां चरन्तो वरबोधिचारिकाम् ।
सर्वत्र चासीत् प्रतिभानवन्त
  सर्वत्र चासीत् सद ब्रह्मचारी ॥ ३ ॥
स पश्चिमे काले महाभयानके
  त्वमेव साक्षी अजिता ममात्र ।
स्थिहित्व शुद्धे सद ब्रह्मचर्ये N 202
  वैस्तारिकं एष समाधि काहिते ॥ ४ ॥
समाधिनेमन्तु इदं प्रणीतं
  एतेन मार्गेण स बोधि लप्स्यते ।
परिगृहीतो बहुबुद्धकोटिभिः
  पूजां वरां काहिति नायकानाम् ॥ ५ ॥
ज्ञाने स्थिहित्वा अहु व्याकरोमि
  चन्द्रप्रभस्याचरितं विशिष्टम् ।
न पश्चकालेऽस्य भवेऽन्तरायो
  न ब्रह्मचर्यस्य न जीवितस्य ॥ ६ ॥
हस्ते यथा आमलकानि पञ्च
  प्रजानाति बुद्धसहस्रकोटयः ।

---

* B is missing upto st 12*. १ A reads तस्यां वेलायां after महासत्त्वं. २ A भ्रमास्ति for °ति. ३ C अजितामभात्र. ४ C वद for सद. ५ C समाधि for स बोधि.

## ॥ पूर्वयोगपरिवर्तः ॥

N 206 स्मरामि पूर्वे चरमाणु चारिकां[१]
सिंहध्वजस्य सुगतस्य शासने ।
अभूषि भिक्षु विदु धर्मभाणको
नामेन सो उच्यति ब्रह्मदत्त ॥ १ ॥
अहं तदासीन्मति राजपुत्रो[२]
आचारिको बाढ गिलान दुःखित ।
मह्यं च सो आचरियो अभूषि
यो ब्रह्मदत्तस्तद धर्मभाणकः ॥ २ ॥
पश्चोत्तरा वैद्यशता अनूनका
व्याधिं चिकित्सन्ति उदुत्तमानसा ।
N 207 व्याधिं न शक्नोन्ति मम चिकित्सितु
सर्वे मम ज्ञातय[३] आसि दुःखिता ॥ ३ ॥
श्रुत्वा च गैलान्यु स मह्य भिक्षु
गिलानपृच्छो मम अन्तिकागत ।
कृपा जनेत्वा मम ब्रह्मदत्तो
इमं समाधिं मम तत्र देशयी ॥ ४ ॥
तस्य[४] मया एतु समाधि श्रुत्वा
उत्पन्न प्रीति अरिया निरामिषा ।
स्वभावु धर्माण प्रजानमानो
उत्थासि व्याधी तुहु[५] तस्मि काले ॥ ५ ॥
दीपंकर सो चरमाणु चारिका
अभूषि भिक्षुर्विदु धर्मभाणकः ।
अहं च आसी मतिराजपुत्र
समाधिज्ञानेन हु व्याधि मोचित ॥ ६ ॥
तस्मात् कुमारा बहु[६] पश्चकाले
अनुस्मरन्तो इमु पारिहाणिम् ।
सहेसि बालान दुरुक्त वाक्य
धारेन्तु वाचेन्तु इमं समाधिम् ॥ ७ ॥

---

१ Before स्मरामि ABT read a passage given in App I (No 17) २ A अहं च आसीन्मतिराजपुत्रो for the line ३ C ज्ञातिक for ज्ञातय ४ B तस्मा for तस्य ५ A हि for हु ६ AB तुहु for बहु

मेष्यन्ति भिक्षु बहु पश्चकाले N 203
   लुब्धाश्च दुष्टाश्च असंयताश्च ।
पापेच्छ अभ्योपित पापचीमे
   प्रतिक्षिपिष्यन्ति इम समाधिम् ॥ ८ ॥
ईर्ष्यालुका[1] उद्धत प्राकृतेन्द्रिया
   कुलेषु[2] चाभ्योपित लाभकामा ।
प्रायोगिको मस्तनि नित्य सृक्षिता
   प्रतिक्षिपिष्यन्ति इम समाधिम् ॥ ९ ॥
हस्ताश्च पादाश्च तथ नियमाना
   हास्ये च लास्ये च सदा प्रयुक्ता ।
परस्पर कण्ठिक श्लिष्यमाणा
   ग्रामेषु चर्यापथि अन्नु मेष्यति[3] ॥ १० ॥
अयुक्तयोगानिमि भोन्ति लक्षणा
   परकुमारीषु च नित्य भ्योपिता ।
रूपेण रक्ता[4] ग्रथिता भवति N 200
   हिंडन्ति[5] ग्रामान्निगमांश्च राष्ट्रान् ॥ ११ ॥
ते खाद्यपेयस्मि सदा प्रयुक्ता
   नाट्ये च गीते च तथैव वादिते ।
क्रयविक्रय चो[6] सद भोन्ति उत्सुका
   पानेऽपि चाभ्योपित नष्टलज्जा ॥ १२ ॥
नैखान पिष्यन्ति अयुक्तयोगा
   शीलं तथैवापदु छोरयित्वा ।
मर्याद भिन्दित्व गृहीभि सार्धं[7]
   त भिक्षवृत्ता नित्यप्रतिष्ठिता ॥ १३ ॥
ये धर्म बुद्धेहि सदा विवर्जिता
   लुब्धमानकुले च सदा प्रयुक्ता ।
तत्कर्म कृत्वान विशिष्टपापकान्
   अपायु यास्यन्ति निहीनकर्मा ॥ १४ ॥
प्रभूतवित्त मणिहेमरूप्य
   गृहांश्च ज्ञातींश्च विहाय प्रव्रजि ।

---

१ C ईर्ष्यासुका for °लुका २ C कुले अवाभ्योपित for कुलेषु चाभ्योपित ३ B अभ्युपेष्यति for अन्नु मेष्यति ४ A सक्ता B सक्तो C शक्ता for रक्ता ५ B हिंडन्ति C मुष्यति for हिंडन्ति ६ A चोत्सद B चोत्सव for चो सद ७ C गृह च

अदान्तकायाश्च अदान्तवाच,
अदान्तचित्ताश्च अपायनिम्नाः ॥ ३० ॥

N 214 अहं च भाषेय गुणान वर्णान्
न चो गुणान् भिक्षु समाचरेय्या।
न घोषमात्रेण च बोधि लभ्यते
प्रतिपत्तिसारेण न बोधि दुर्लभा ॥ ३१ ॥

इति श्रीसमाधिराजे पूर्वयोगपरिवर्तो नाम षोडशः ॥ १६ ॥

१ C अदान्तचित्ता अदान्ताश्च २ B अपायनिम्न° for अपायनिम्ना ३ B समाचिरेय्या for समाचरेय्या. ४ AB लप्स्यते for लभ्यते. ५ C °साराद् for °सारेण.

## ॥ बहुबुद्धनिर्हारसमाधिमुखपरिवर्तः ॥

अथ खलु भगवांस्तां महतीं सागरोपमां पर्षदं धर्मकथया संदर्श्य समुत्तेज्य संप्रहर्ष्य N 215
समादाप्य उत्थायासनात् प्राक्रामत्। येन च गृध्रकूटपर्वतराजस्तेनोपसमक्रामत्। उपसंक्रम्य N 216
च प्रज्ञप्त एवासने न्यषीदत्। भिक्षुसंघपरिवृतो[5] देवनागयक्षगन्धर्वासुरगरुडकिंनरमहोरग
मनुष्यामनुष्यनमस्कृतः सागरोपमायां पर्षदि धर्मं संदर्शयति स्म। अथ खलु चन्द्रप्रभः N 217
कुमारभूतो भगवन्तं निर्गतं विदित्वा अशीत्या प्राणिकोटीशतैः सार्धं सर्वर्द्धिकभूतैरन्यलोक
धात्वागतैश्च संबहुलैर्बोधिसत्त्वमहासत्त्वनियुतैः सार्धं पुष्पधूपगन्धमाल्यविलेपनं गृहीत्वा तूर्यशतैः
र्वाद्यमानैश्छत्रध्वजघण्टापताकाभिरत्युच्छ्रिताभिर्महामाल्याभिनिर्हारमादाय भगवतः पूजाकर्मणे[9]
येन गृध्रकूटपर्वतो येन च भगवांस्तेनोपजगाम। उपेत्य च भगवतः पादौ शिरसाभिवन्द्य भगवन्तं
त्रिः प्रदक्षिणीकृत्य तैः पुष्पधूपगन्धमाल्यविलेपनैस्तूर्यतालावचरैः प्रवाद्यमानैर्महतीं पूजां कृत्वा एकान्ते
न्यषीदत् सगौरवः सप्रतीशो धर्मपरिपृच्छायै॥

अथ खलु चन्द्रप्रभः कुमारभूतो भगवन्तमेतदवोचत्—पृच्छेयमहं भगवन्तं तथागतमर्हन्तं
सम्यक्संबुद्धं कंचिदेव प्रदेशं सचेन्मे भगवानवकाशं कुर्यात् पृष्टप्रश्नव्याकरणाय। एवमुक्ते
भगवांश्चन्द्रप्रभं कुमारभूतमेतदवोचत्—पृच्छ त्वं कुमार तथागतमर्हन्तं सम्यक्संबुद्धं यद्
यदेवाकाङ्क्षसि। कृतावकाशस्ते कुमार तथागतेनावकाशः। एवमुक्ते चन्द्रप्रभः कुमारभूतो[15] N 218
भगवन्तमेतदवोचत्—कतिभिर्भगवन् धर्मैः समन्वागतो बोधिसत्त्व इमं सर्वधर्मस्वभावसमता
विपञ्चितं समाधिं प्रतिलभते? एवमुक्ते भगवांश्चन्द्रप्रभं कुमारभूतमेतदवोचत्—चतुर्भिः कुमार धर्मैः
समन्वागतो बोधिसत्त्व इमं सर्वधर्मस्वभावसमताविपञ्चितं समाधिं प्रतिलभते। कतमैश्चतुर्भिः?
इह कुमार बोधिसत्त्वो महासत्त्वः सूरतो भवति सुविनीतसंवासो दान्तो दान्तभूमिमनुप्राप्तः। स
परैराक्रुष्टो वा परिभाषितो वा दुरुक्तानां दुरागतानां वचनपथानां क्षमो भवत्यधिवासनजातीयः
कर्मदर्शी निहतमानो धर्मकामः। अनेन कुमार प्रथमेन धर्मेण समन्वागतो बोधिसत्त्वो महासत्त्व
इमं समाधिं प्रतिलभते। पुनरपरं कुमार बोधिसत्त्वो महासत्त्वः शीलवान् भवति। परिशुद्धशील

१ Before अथ, A B T read a passage given in App I (No 18) २ B reads कथया सदर्शने समुत्तेजसंप्रहर्ष्य for कथया संप्रहर्ष्य ३ AC संदिश्य for संदर्श्य ४ For एवासने न्यषीदत् A B T read आसनात् प्रक्रामत्तावत्या एव च बुद्धद्युत्या राजगृहान्महानगरान्निष्क्रम्य तया तद्द्वारेणैव येन गृध्रकूट पर्वतराजस्तेनोपसक्रान्त। उपसंक्रम्य च येन मैत्रेय विनिर्मितो रत्नमण्डपस्तेनोपसंक्राम दुपसंक्रम्य मैत्रेयाभिनिर्मिते महति रत्नसिंहासने न्यषीदत् ५ After °परिवृतो, AB add बोधिसत्त्वगण पुरस्कृत ६ A B देवतासमास ७ A B om. भगवन्तं निर्गतं विदित्वा ८ A B °कोटीनियुतशतसहस्रैः for °कोटीशतैः C ब्राह्मणकोटी° for प्राणिकोटी° ९ After °कर्मणे A B add राजगृहान्महानगरान्निर्छत्रद्वारेण निष्क्रम्य १० A B °कूट पर्वतराजो for °कूटपर्वतो ११ A °विलेपनचूर्णचीवरच्छत्रध्वजपताकाभिस्तूर्य° for °विलेपनैस्तूर्य° १२ A सप्रतिश B सप्रतीत for सप्रतीशो १३ After खलु A B add दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य १४ After °भूतो AB add धर्मपरिपृच्छायैकान्तनिषण्ण १५ After °भूतो A B add भगवता कृतावकाशो १६ A B °सत्त्वो महासत्त्व for °सत्त्व १७ B om एवमुक्ते प्रतिलभते १८ A B शूरो for सूरतो १९ A B सुखसंवासो for सुविनीतसंवासो २० A दुरुक्तदुरागतानां for दुरुक्तानां

N 210 ते प्रव्रजित्वानिह बुद्धशासने
पापानि कर्माणि सदाचरन्ति ॥ १५ ॥
धने च धान्ये च ते सारसंज्ञिनो
धेनूश्च गाव. शकटानि सञ्चयी ।
किमर्थ तेहि इम केश छोरिता
शिक्षाय येषा प्रतिपत्ति नास्ति ॥ १६ ॥
मया च पूर्वे चरिया चरित्वा
सुदुष्करं कल्पसहस्र चीर्णम् ।
अयं च मे शान्त समाधिरेषितो
यतेष श्रुत्वा तद हास्यु मेष्यति ॥ १७ ॥
चिरं मृषावादि अब्रह्मचारिणो
अपायनिम्नाः सद कामलाभाः ।
ते ब्रह्मचारीण ध्वजं गृहीत्वा
दु:शील वक्ष्यन्ति न एष धर्मः ॥ १८ ॥
भेदाय स्थास्यन्ति च ते परस्परं
अयुक्तिभिर्लाभ गवेषमाणा. ।
N 211 अवर्ण भाषित्व तु अन्यमन्यं
च्युता गमिष्यन्ति अपायभूमिम् ॥ १९ ॥
शत सहस्रेषु सुदुर्लभास्ते
क्षान्तीबलं येषु तदा भविष्यति ।
अतो बहू ये कलहस्मि उत्सुका
प्रपञ्च काहिन्ति जहित्व क्षान्तिम् ॥ २० ॥
वक्ष्यन्ति वाचा वय बोधिसत्त्वा
शब्दोऽपि तेषा व्रजि देशदेशे ।
अभूतशब्देन मदेन मत्ता
विपन्नशीलान कुतोऽस्ति बोधि ॥ २१ ॥
न मे श्रुतं नापि कदाचि दृष्ट-
मध्याशयो यस्य विशुद्ध नास्ति ।
इमेषु धर्मेषु च नास्ति क्षान्ति
स लप्स्यते बोधि क्षिपित्व धर्मान् ॥ २२ ॥

---

१ A B समाचरन्ति for सदा°. २ A भूतसंज्ञिनो for सार° ३ B कीर्णम् for चीर्णम् ४ A अय त तेषा न समाधि देशितो for the line ५ B अपायनिम्ना. ६ A च for त ७ AB प्रतिलप्स्यते for स लप्स्यते.

भीताश्च त्रस्ताश्च गृहं त्यजन्ति
　ते प्रव्रजि दृढ[1]तरा भवन्ति ।
विशेषगामा विलयं प्रयान्ति[2] N 212
　क्षिपित्व यानं पुरुषोत्तमानाम् ॥ २३ ॥
[3]निहीनप्रज्ञा गुणविप्रहीना
　पश्यन्ति दोषं सद अप्रमत्ते ।
य[4]स्मै च ते तच्छरणं प्रपन्ना-
　स्त[5]त्रैव ते दोषशतान् वदन्ति ॥ २४ ॥
आजीविका ये बहु प्रव्रजिता
　अनर्थिकाः सर्वसुबुद्धबोधये ।
ते शासनस्मीय स्थिहित्व बाला
　उत्त्रस्त भेष्यन्ति श्रुणित्व शून्यताम् ॥ २५ ॥
विहा[6] कृत्वान त अन्यमन्यं
　व्यापाददोषांश्च खिलं ज[7]नित्वा ।
अभ्याख्य दत्वा च परस्परेण
　लप्स्यन्ति प्रामोद्य करित्व पापकम् ॥ २६ ॥
यः शीलवन्तो गुणवन्तु भेष्यति
　मै[8]त्रीविहारी सद क्षान्तिकोविदः ।
सु[9]संवृतो मार्दवसूरतश्च N 213
　परिभू[10]त सो भेष्यति तस्मि काले ॥ २७ ॥
यो सो पुनर्भेष्यति दुष्टचित्तः
　सुदारुणो रौद्र[11]निहीनकर्मा ।
अधर्मचारी कलहे रतश्च
　स पूजितो भेष्यति तस्मि काले ॥ २८ ॥
आरोचयामि प्रतिवेदयामि
　सचेत् कुमारा मम श्रद्द गच्छसि ।
इमां स्मरित्वा सुगतानुशासनीं
　मा[12] जातु विश्वस्तु भवेसि तेषाम् ॥ २९ ॥
ते[13] तीव्ररागास्तथ तीव्रदोषा-
　स्ते तीव्रमोहा. सद मानमत्ता. ।

१ A गाढतरा for दृढ°. २ AB प्रजन्ति for प्रयान्ति. ३ C om. st.24. ४ A यस्यैव for यस्मै च. ५ A तस्यैव for तत्रैव ६ A B विहार; C विचार for विहार. ७ C जनेभ्य for जनित्वा. ८ C मैत्राविहारी. ९ C असंवृतो for सु°. १० B परिभुक्त for °भूत ११ A °विहीनकर्मा for °निहीन°. १२ B न for मा. १३ B ते तीव्ररागास् for ते तीव्र°.

N 214

अदान्तसापाश्च अदान्तवाचः[1]
अदान्तचित्ताश्च अपायनिम्नाः[2] ॥ ३० ॥
अहं च भाषेय्य गुणान वर्णान्
न चो गुणान् भिक्षु समाचरेय्या[3] ।
न घोषमात्रेण च बोधि लभ्यते[4]
प्रतिपत्तिसारेण[5] न बोधि दुर्लभा ॥ ३१ ॥

इति श्रीसमाधिराजे पूर्वयोगपरिवर्तो नाम षोडशः ॥ १६ ॥

---

१ C अदान्तचित्ता अदान्तवाचश्च २ B अपायनिम्ना: for अपायनिम्नाः ३ समाधिमेय्या for समाचरेय्या. ४ AB लप्स्यते for लभ्यते. ५ C °सारद्ध for °सारेण.

## ॥ बहुबुद्धनिर्हारसमाधिमुखपरिवर्तः ॥

अथ[1] खलु भगवांस्तां महतीं सागरोपमां पर्षदं धर्म्यया कथया संदर्श्य समुत्तेज्य संप्रहर्ष्य N 215
समादाप्य उत्थायासनात् प्राक्रामत् । येन च गृध्रकूटपर्वतराजस्तेनैव उपसमक्रामत् । उपसंक्रम्य N 216
च प्रज्ञप्त एवासने न्यषीदत् । भिक्षुसंघपरिवृतो[5] देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरग-
मनुष्यामनुष्यैर्नमस्कृत सागरोपमायां पर्षदि धर्मं संदेशयति स्म । अथ खलु चन्द्रप्रभः
कुमारभूतो भगवन्तं निर्गतं विदित्वा अशीत्या प्राणिकोटीशतैः सार्धं संबंधिभूतैरन्यलोक- N 217
धात्वागतैश्च सबहुलैर्बोधिसत्त्वमहासत्त्वनियुतैः सार्धं पुष्पधूपगन्धमाल्यविलेपन गृहीत्वा तूर्यशतैः
र्वाद्यमानैश्छत्रध्वजघण्टापताकाभिरभ्युच्छ्रिताभिः महामाल्याभिनिर्हारमादाय भगवतः पूजाकर्मणे[9]
येन गृध्रकूटपर्वतो येन च भगवांस्तेनोपजगाम । उपेत्य च भगवतः पादौ शिरसाभिवन्द्य भगवन्तं
त्रिः प्रदक्षिणीकृत्य तैः पुष्पधूपगन्धमाल्यविलेपनैस्तूर्यतालावचरैः प्रवाद्यमानैर्महतीं पूजां कृत्वा एकान्ते
न्यषीदत् सगौरवः सप्रतीशो धर्मपरिपृच्छायै ॥

अथ खलु[13] चन्द्रप्रभः कुमारभूतो भगवन्तमेतदवोचत्–पृच्छेयमहं भगवन्तं तथागतमर्हन्तं
सम्यक्संबुद्धं कंचिदेव प्रदेशं सचेन्मे भगवानवकाशं कुर्यात् पृष्टप्रश्नव्याकरणाय । एवमुक्ते
भगवांश्चन्द्रप्रभं कुमारभूतमेतदवोचत्–पृच्छ त्वं कुमार तथागतमर्हन्तं सम्यक्संबुद्धं यद्
यदेवाकाङ्क्षसि । कृतावकाशस्ते कुमार तथागतेनावकाशः । एवमुक्ते चन्द्रप्रभः कुमारभूतो[15]
भगवन्तमेतदवोचत्–कतिभिर्भगवन् धर्मैः समन्वागतो बोधिसत्त्व इमं सर्वधर्मस्वभावसमता N 218
विपञ्चितं समाधिं प्रतिलभते ? एवमुक्ते भगवांश्चन्द्रप्रभं कुमारभूतमेतदवोचत्–चतुर्भिः कुमार धर्मैः
समन्वागतो बोधिसत्त्व इमं सर्वधर्मस्वभावसमताविपञ्चितं समाधिं प्रतिलभते । कतमैश्चतुर्भिः ?
इह कुमार बोधिसत्त्वो महासत्त्वः सूरतो भवति सुविमर्शो दान्तो दान्तभूमिमनुप्राप्तः । स
परैराक्रुष्टो वा परिभाषितो वा दुरुक्तानां दुर्भाषितानां वचनपथानां क्षमो भवत्यविपरीतजातीयः
कर्मदर्शी निहतमानो धर्मकामः । अनेन कुमार प्रथमेन धर्मेण समन्वागतो बोधिसत्त्वो महासत्त्व
इमं समाधिं प्रतिलभते । पुनरपरं कुमार बोधिसत्त्वो महासत्त्वः शीलवान् भवति । परिशुद्धशील-

---

१ Before अथ, A B T read a passage given in App I (No 18) २ B reads कथया सन्दर्शितः समुत्तेजसंप्रहर्ष्य for कथया संप्रहर्ष्य ३ AC संदिश्य for संदर्श्य ४ For एवासने न्यषीदत्, A B T read आसनात्प्रक्रामन्नदृश्य एव च बुद्धचर्या राजगृहान्महानगरान्निष्क्रम्य तथा तद् द्वारेणैव येन गृध्रकूट पर्वतराजस्तेनोपसक्रामन् । उपसंक्रम्य च येन मैत्र्याभिनिर्मितो रत्नमाडस्तेनोपसंक्राम दुपसंक्रम्य मैत्र्याभिनिर्मिते महति रत्नसिंहासने न्यषीदत् ५ After °परिवृतो, AB add बोधिसत्त्वगण पुरस्कृत ६ A B देशयामास ७ A B om भगवन्तं निर्गतं विदित्वा ८ A B °कोटीनियुतशतसहस्रैः for °कोटीशतैः, C ब्राह्मणकोटी° for प्राणिकोटी° ९ After °कर्मणे A B add राजगृहान्महानगराच्छिन्नद्वारेण निष्क्रम्य १० A B °कूट पर्वतराजो for °कूटपर्वतो ११ A °विलेपनचूर्णचीवरच्छत्रध्वजपताकाभिस्तूर्य° for °विलेपनैस्तूर्य° १२ A सप्रतीतिः, B सप्रतीश for सप्रतीशो १३ After खलु, A B add दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य १४ After °भूतो, AB add भगवता कृतावकाशो १६ A B °सत्त्वो महासत्त्व धर्मपरिपृच्छायै कान्तनियम्य १५ After °भूतो, A B add भगवता कृतावकाशो १६ A B शूरो for सूरतो १९ A B सुखसंवासो for सुविमर्शो for °सत्त्व १७ B om एवमुक्ते प्रतिलभते १८ A B शूरो for सूरतो १९ A B सुखसंवासो for सुविसवासो २० A दुरुक्तदुरागतानां for दुरुक्तानां

अदान्तचर्याश्च अदान्तवाचः
अदान्तचित्ताश्च अपायनिम्नाः ॥ ३० ॥
N 214 अहं च भाषेय गुणान वर्णान्
न चो गुणान् भिक्षु समाचरेय्या ।
न घोषमात्रेण च बोधि लभ्यते
प्रतिपत्तिसारेण न बोधि दुर्लभा ॥ ३१ ॥

इति श्रीसमाधिराजे पूर्वयोगपरिवर्तो नाम षोडशः ॥ १६ ॥

१ C अदान्तचित्ता अदान्तवाचश्च २ B अपायनिम्नः for अपायनिम्नाः. ३ B समाचिरेय for समाचरेय्या. ४ AB लप्स्यते for लभ्यते. ५ C °सारेह for °सारेण.

तेजेश्वरस्य द्विपदोत्तमस्य
पट्सप्तती वर्षसहस्र आयुः ॥ ३ ॥

तेजेश्वरस्योपरतेन बुद्धो
मतीश्वरो नाम जिनो अभूषि ।
मतीश्वरस्य द्विपदोत्तमस्य
वर्षाण कोटी परिपूर्ण आयु ॥ ४ ॥

मतीश्वरस्योपरतेन बुद्धो
महेश्वरो नाम जिनो अभूषि ।
महेश्वरस्य द्विपदोत्तमस्य
चतुर्दशो वर्षसहस्र आयु ॥ ५ ॥

महेश्वरस्योपरतेन बुद्धो
अग्नीश्वरो नाम जिनो अभूषि ।
अग्नीश्वरस्य द्विपदोत्तमस्य
षष्टिस्तदा वर्षसहस्र आयु ॥ ६ ॥

अग्नीश्वरस्योपरतेन बुद्धो
महाननो नाम जिनो अभूषि । N 222
महाननस्य द्विपदोत्तमस्य
रात्रिंदिवा सम अभूषि आयु ॥ ७ ॥

महाननस्योपरतेन बुद्धो
गणेश्वरो नाम जिनो अभूषि ।
गणेश्वरस्य द्विपदोत्तमस्य
पञ्चवर्षकोट्य परिपूर्ण आयु ॥ ८ ॥

गणेश्वरस्योपरतेन बुद्धो
घोषेश्वरो नाम जिनो अभूषि ।
घोषेश्वरस्य द्विपदोत्तमस्य
नववर्षकोट्य परिपूर्ण आयु ॥ ९ ॥

घोषेश्वरस्योपरतेन बुद्धो
घोषाननो नाम जिनो अभूषि ।
घोषाननस्य द्विपदोत्तमस्य
दशवर्षकोट्य परिपूर्ण आयु ॥ १० ॥

१ AC °श्वरस्यप्यपरेण for °स्योपरतेन २ AC °स्योपरतेश्च for °परतेन ३ A om. 6^{cd}

घोषाननस्योपरतेन बुद्ध-
थन्द्राननो नाम जिनो अभूषि ।
चन्द्राननस्य द्विपदोत्तमस्य
रात्रिंदिवा एक अभूषि आयु ॥ ११ ॥

N 223 चन्द्राननस्योपरतेन बुद्ध
सूर्याननो नाम जिनो अभूषि ।
सूर्याननस्य द्विपदोत्तमस्य
अष्टादशो वर्षसहस्र आयु ॥ १२ ॥

सूर्याननस्योपरतेन बुद्धो
ब्रह्माननो नाम जिनो अभूषि ।
ब्रह्माननस्य द्विपदोत्तमस्य
त्रिंशीति वर्षसहस्र आयु ॥ १३ ॥

ब्रह्माननस्योपरतेन बुद्धो
ब्रह्मश्रवो नाम जिनो अभूषि ।
ब्रह्मश्रवस्य द्विपदोत्तमस्य
अष्टादशो वर्षसहस्र आयु ॥ १४ ॥

एकस्मि कल्पस्मि इमे उपन्ना
दुवे शते लोकविनायकानाम् ।
शृणोहि नामानिह कीर्तयिष्ये
अनाभिभूतान तथागतानाम् ॥ १५ ॥

N 224 अनन्तघोषश्च विघुष्टघोषो
विघुष्टतेजश्च विघुष्टशब्द ।
स्वराङ्गघुष्टश्च स्वरार्चितश्च
स्वराङ्गशूरश्च स्वराङ्गशब्द ॥ १६ ॥

ज्ञानाकरो ज्ञानविशाषश्च
ज्ञानाभिभूर्ज्ञानसमुद्गतश्च ।
ज्ञानार्चिमान् ज्ञान अभ्युद्गतश्च
विघुष्टज्ञानस्तथ ज्ञानशूर ॥ १७ ॥

ब्रह्माकरो ब्रह्मवसु सुनाम
ब्रह्मा च देवस्तथ ब्रह्मघोष ।

१ C द्वात्रिंशतिं वर्षसहस्रमायु for the line २ C एकत्र for एकस्मि ३ A दुवे शता, B दुवं शता ४ C विनिर्घोषो for विघुष्ट° ५ B ज्ञानाभिभूतो for ज्ञानाभिभू° ६ B विघस्त° for विघुष्ट°

ब्रह्मेश्वरो ब्रह्मनरेन्द्रनेत्रो
महास्वराङ्ग स्वरमण्डलश्च ॥ १८ ॥
तेजोबलस्तेजगति सुतेजा
तेजेश्वरस्तेजसमुद्गतश्च
तेजोऽभिभुस्तेजविनिश्चितश्च ।
तेजस्वरेन्द्र सुविघुष्टतेजा ॥ १९ ॥
भीष्मो बलो भीष्ममति सुभीष्मो N 225
भीष्माननो भीष्मसमुद्गतश्च ।
भीष्मार्चि भीष्मोत्तम भीष्मघोषा
एते जिना लोकविनायकाऽभूत् ॥ २० ॥
गम्भीरघोष गिरिघोरणश्च
विशुद्धघोषेश्वर शुद्धघोष ।
अनन्तघोष सुविमुक्तघोषो
मारो बलो मारवित्रासनश्च ॥ २१ ॥
सुनेत्र शुद्धाननु नेत्रशुद्धो
विशुद्धनेत्रश्च अनन्तनेत्र ।
समन्तनेत्रश्च विघुष्टनेत्रो
नेत्राभिभूर्नेत्रअनिन्दितश्च ॥ २२ ॥
दान्तोत्तरो दान्त सुदान्तचित्त
सुदान्त शान्तेन्द्रिय शान्तमानस ।
शान्तोत्तर शान्तगिरी प्रशान्त
शान्तीय पारगतु शान्तिशूर ॥ २३ ॥
स्थितोत्तर शान्त सुदान्तचित्त N 226
सुदान्तशान्तेन्द्रियु शान्तमानस ।
शान्तोत्तर शान्तश्रिया व्यन्त
शान्तप्रशान्तेश्वरु शान्तिशूर ॥ २४ ॥
गणेन्द्र गणमुख्यु गणेश्वरश्च
गणाभिभूर्गणिवर शुद्धज्ञानी ।
महागणेन्द्रश्च गणेन्द्रशूरो
अन्यो पुनो गणिवर धर्मोचरु ॥ २५ ॥
धर्मध्वजश्चो तथ धर्मकेतु
धर्मोत्तरो धर्मस्वभावउद्गत ।

१ A सुविशुद्ध° for सुविघु° २ AB गिरिवारणश्च ३ B शान्तानन for शान्तोत्तर ४ C विमोचक

धर्मध्वजश्चैव सुधर्मशूरः
स्वभावधर्मोत्तरनिश्चितश्च ॥ २६ ॥
स्वभावधर्मोत्तरनिश्चितस्य
अशीतिकोट्यः सहनामधेयाः ।
द्वितीयकल्पस्मि उपन्न नायका
एते मया पूजित बोधिकारणात् ॥ २७ ॥
स्वभावधर्मोत्तरनिश्चितस्य
यो नामधेयं शृणुते जिनस्य ।
N 227 श्रुत्वा च धारेति विघुष्ट नाम
स क्षिप्रमेतं लभते समाधिम् ॥ २८ ॥
एतेष बुद्धान परेण अन्यो
अचिन्तिये अपरिमितस्मि कल्पे ।
अभूषि बुद्धो नरदेवपूजितः
स नामधेयेन नरेन्द्रघोषः ॥ २९ ॥
नरेन्द्रघोषस्य तथागतस्य
षट्सप्तती वर्षसहस्रमायुः ।
त्रयश्च कोटीशत श्रावकाणां
यः सन्निपातः प्रथमो अभूषि ॥ ३० ॥
षड्भिज्ञ त्रैविद्य जितेन्द्रियाणां
महानुभावान महर्द्धिकानाम् ।
क्षीणास्रवाणान्तिमदेहधारिणां
संघस्तदा आसि प्रभाकरस्य ॥ ३१ ॥
अशीति कोटीनियुता सहस्रा
यो बोधिसत्वान गणो अभूषि ।
N 228 गम्भीरबुद्धीन विशारदानां
महानुभावान महर्द्धिकानाम् ॥ ३२ ॥
अभिज्ञप्राप्ताः प्रतिभानवन्तो
गतिंगताः सर्वि शून्यतायाः ।
ऋद्धीय गच्छन्ति ते क्षेत्रकोटियो
ततोत्तरे यात्तिक गङ्गवालुकाः ॥ ३३ ॥

१ A धर्मध्वजश्चैव. २ After समाधिम्, T adds a colophon, and A B add: अथ खलु भगवान् भूयस्या मात्रया इमं बहुबुद्धनिर्हारसमाधिसुखं पूर्वयोगपरिवर्तं चन्द्रप्रभस्य कुमारभूतस्य गाथाभिगीतेन विस्तरेण सम्प्रकाशयति स्म. ३ A गम्भीरप्रज्ञान for °बुद्धीन. ४ AB शून्यतायाम्; C शुद्धताया. ५ AB च for ते. ६ B C गङ्गवालिका. for °वालुकाः

पृच्छित्व प्रश्नं द्विपदानुत्तमान्
पुनेन्ति तस्यैव जिनस्य अन्तिके ।
सूत्रान्तनिर्हारनिरुक्तिकोविदा
आलोकभूता विचरन्ति मेदिनीम् ॥ ३४
सत्त्वानमर्थाय चरन्ति चारिकां
महानुभावाः सुगतस्य पुत्राः ।
न कामहेतोः प्रकरोन्ति पापं
देवा पि तेषां स्पृह संजनेन्ति ॥ ३५ ॥
अनर्थिका भवगतिषु न निश्रिताः
समाहिता ध्याननिर्हारगोचराः ।
विनिश्चितार्थाश्च विशारदाश्च N 229
निरामगन्धाः सद ब्रह्मचारिणः ॥ ३६ ॥
अच्छेद्यवाक्याः प्रतिभानवन्तो
निरुक्तिनिर्देशपदार्थकोविदाः ।
सर्वज्ञसंदर्शक बुद्धपुत्राः
परिगृहीताः कुशलेन कर्मणा ॥ ३७ ॥
अनन्तकल्पाश्चरियाय उद्गता
स्तुताः प्रशस्ताः सद नायकेहि ।
विमोक्षतत्त्वार्थपदान देशकाः
असंक्लिष्टाः सुविशुद्धशीला ॥ ३८ ॥
अनोपलिप्ता पद्मेन वारिणा
विमुक्त त्रैधातुकतोऽप्रमत्ताः ।
अनोपलिप्ताश्च हि लोकधर्मै-
र्विशुद्धकायाः परिशुद्धकर्मा ॥ ३९ ॥
अल्पेच्छ संतुष्ट महानुभावा
अगृद्ध ते बुद्धगुणाः प्रतिष्ठिता ।
सर्वेष सत्त्वान गतिः परायणा N 230
न घोषमात्रप्रतिपत्तिसारा ॥ ४० ॥
यत्र स्थितास्तं च परेषु देशयु
सर्वेहि बुद्धेहि परिगृहीताः ।

१ A द्विपदानुत्तम for °नुत्तमान्. २ A भवगतिषु अनिश्रिताः; B भवगतिष्व अनिश्रिता for भवगतिषु न निश्रिताः. ३ B ध्यानविचार for °निर्हार°. ४ A अनाच्छेद्यवाक्या; B अनाक्षेद्या for अच्छेद्यवाक्याः. ५ B स्तुत्य l. for स्तुताः. ६ B °विमिश्रसुविशुद्ध° for °क्लिष्टा सुविशुद्ध°. ७ AB परिशुद्धधर्माः for °कर्मा. ८ A °गुणप्रतिष्ठिताः

वैशारिद्याः कोशधरा जिनानां
ते सर्वि त्रैधातुकि त्रस्तमानसाः ॥ ४१ ॥
प्रशान्तचित्ताः सद रण्यगोचरा
अधिष्ठिता लोकविनायकेभि.।
भापन्ति भूतान्तसहस्रकोटियो
यं चैव भापन्ति स बुद्धवर्णितम् ॥ ४२ ॥
विवर्जिताः सर्वपदेभि लौकिकाः
शून्याधिमुक्ताः परमार्थदेशकाः।
अनन्तवर्णा गुणसागरोपमाः
बहुश्रुताः पण्डित विज्ञवन्तः ॥ ४३ ॥
सचेत् कुमारो बहुकल्पकोटिय
अधिष्ठिहन्तः प्रवेदेय वर्णम्।
से अल्पकं तत् परिकीर्तितं भवेद्
यथा समुद्रादुदबिन्दुरेक ॥ ४४ ॥
N 231 तस्मिंश्च काले स नरेन्द्रघोषो
देशेतिमं शान्त समाधि दुर्दशम्।
महात्रिसाहस्रिय लोकधातु
देवेहि नागेहि स्फुटो अभूपि ॥ ४५ ॥
तस्यो इमं शान्त समाधि भापतः
प्रकम्पिता मेदिनि षड्‌विकारम्।
देवा मनुष्या यथ गङ्गवालिका
अविवर्तिकाये स्थित बुद्धज्ञाने ॥ ४६ ॥
तत्रासि राजा मनुजान ईश्वर
शिरीबलो नाम महानुभाव।
पुत्राण तस्यो शत पञ्च आस-
न्नभिरूप प्रासादिक दर्शनीयाः ॥ ४७ ॥
अशीति कोटीशत इस्त्रियाणा-
मन्तःपुरं तस्य अभूपि राज्ञ.।
चतुर्दशो कोटिसहस्र पूर्णा
दुहितरो तस्य अभूपि राज्ञ. ॥ ४८ ॥
स कार्तिकाया तद पूर्णमास्या-
मध्याह्निकं पोषधमाददित्वा।

१ A प्रभगेध्य वाक्यम्; B प्रमशोपवाक्यम् (?). २ AB अस्यल्पकं for स अल्पकं. ३ A धीतरो तस्य अभूपि भूपते for the line. ४ A पूर्णिमायाम for पूर्णमास्याम्.

अशीतिकोटीनियुतेहि सार्ध- N 232
मुपागमल्लोकगुरुस्य अन्तिकम् ॥ ४९ ॥
वन्दित्व पादौ द्विपदोत्तमस्य
न्यषीदि राजा पुरतो जिनस्य ।
अध्याशयं तस्य विदित्व राज्ञो
इमं समाधिं द्विपदेन्द्र देशयि ॥ ५० ॥
स[२] पार्थिवः श्रुत्व समाधिमेत-
मुत्सृज्य राज्यं यथ खेटपिण्डम् ।
परित्यजित्वा प्रिय ज्ञातिबान्धवान्[३] N 233
स प्रव्रजी तस्य जिनस्य शासने ॥ ५१ ॥
पुत्राण पञ्चाशत प्रव्रजिंसु
अन्तःपुरं चैव तथैव धीतरो ।
अन्ये च तत्र पुत्रज्ञातिबान्धवा
षट्सप्ततिर्नयुत त्रयश्च कोट्यः ॥ ५२ ॥
स प्रव्रजित्वेह सपुत्रदारं
स्थपेत्व आहारनिर्हारभूमिम् ।
अधिष्ठितश्चंक्रमि अष्टवर्षं
स चंक्रमे वस्थितु काल कार्षीत् ॥ ५३ ॥
स कालु कृत्वा तद राजकुञ्जरो
समाधिचित्तो सुसमाहितः सदा ।
तत्रैव सो राजकुले उपन्नो N 234
उपपादुको गर्भमलैरलिप्तः ॥ ५४ ॥
दृढबलो नाम पितास्य भूमि
महामती नाम जनेत्रि आसीत् ।
स जातमात्रो अवची कुमारो
कंचित्तु सो तिष्ठति लोकनाथः ॥ ५५ ॥
जानाति मे आशयु लोकनाथो
येनो ममा शान्त समाधि देशितः ।

१ C लोकविदुस्यमन्तिके २ In B, st. 51 and a few more appear here and they are given in App. I (No 19.) In A and C they appear elsewhere as indicated in notes to passage No 18. ३ B °बान्धवम् for °बान्धवान्. ४ AB शासिके for शासने ५ A B पुत्रज्ञाति° for पुत्रज्ञाति°. ६ A °निहार° for °निर्हार°. ७ B प्रव्रजी for अवची. ८ C अद्यापि for कंचित्तु. ९ After st. 55, AB add : यो मापले धर्मविरागहेतोर्गोपित्व धर्मं द्विपदानमुत्तमो (A °समं°) । सत्वान धर्मं प्रकरोति नायको कश्चिज्जिनो भणति तं समाधिम् ॥ B reads अद्यापि मे तिष्ठति लोकनाथः for the last pāda.

सत्वान चो आशयु ज्ञात्व चोदको
देशेति धर्मं वरबुद्धबोधौ ॥ ७१ ॥
विशेषज्ञानं उपपत्तिज्ञानं
अनन्तज्ञानं सुसमासज्ञानम्[1] ।
सर्वगतीनां प्रतिसंधिज्ञानं
कचिज्जिनो भाषति तं समाधिम् ॥ ७२ ॥
गृहान्[2] समुत्सृज्य प्रव्रज्यचित्तं
त्रैधातुके अनभिरती ननुग्रहः ।
चित्तस्य संप्रग्रहणं सहर्षणा
देशेति धर्मं द्विपदानमुत्तमः ॥ ७३ ॥
धर्मेषु चो नाभिनिवेश तायि
N 230 परिग्रहो धर्मवरे सदा च ।
कर्मविपाके[3] च दृढाधिमुक्तिं
देशेति धर्मं द्विपदानमुत्तमः ॥ ७४ ॥
विनयस्मि[4] कौशल्य विपाकज्ञानं
कलहं विवादान तथोपशान्तिः ।
अविग्रहं वाप्यविवादभूमिं
देशेति धर्मं द्विपदानमुत्तमः ॥ ७५ ॥
क्षान्तीसमादानमक्रोधस्थानं
विनिश्चये धर्मि सदा च कौशलम् ।
पदप्रभेदेषु च ज्ञानदर्शनं
देशेति धर्मं करुणां जनेत्वा ॥ ७६ ॥
पूर्वान्तज्ञानमपरान्तज्ञानं
त्रियध्व-समता सुगतान शासने ।
परिच्छेद उक्तः स त्रिमण्डलस्य
एवं जिनो देशयि धर्मस्वामी[5] ॥ ७७ ॥
चित्तव्यवस्थान[6] एकाग्रता च
N 240 कायव्यवस्थान यथार्थभूमिः ।
ईर्यापथस्थो सद कालि रक्षणा[7]
देशेति धर्मं पुरुषर्षभो मुनिः ॥ ७८ ॥

---

१ B सुसमाधिज्ञानम् for सुसमास°. २ A B गृहवासमुत्सृज्य for गृहान् समुत्सृज्य. ३ A om. कर्मविपाके च. ४ AB विनयस्य for °यस्मि. ५ AB धर्मदेशनां for धर्मस्वामी. ६ A °[illegible] °स्थान एकाग्रता. ७ A रक्षाय for रक्षणा.

हिरिश्च ओत्राप्यु प्रासादिकं च
 युक्तां गिरं भाषति लोकज्ञानम्।
प्रवृत्तिधर्मे प्रकृतिं च प्राणिनां
 देशेति धर्मं वरबोधिमग्र्याम् ॥ ७९ ॥
अनुग्रहं चो हिरिमोत्राप्यं च
 चित्तस्य चाकुशल्ता जुगुप्सना।
धूतस्यानुत्सर्गत पिण्डचर्यां
 देशेति धर्मं द्विपदानमुत्तमः ॥ ८० ॥
हिरिश्च ओत्राप्यु सदाचरेता
 गुरूणामभिवादन प्रत्युत्थानम्।
मानस्य चो निग्रह आदितैव
 एवं जिनो देशयि धर्मस्वामी ॥ ८१ ॥
चित्तसमुत्थानत चित्तकल्यता N 241
 ज्ञानप्रतीवेधु तथानुबोधम्।
अज्ञानपक्षस्य सदा विवर्जना
 देशेति धर्मान् वरबुद्धबोधिम् ॥ ८२ ॥
चित्तप्रवेशं च स्तस्य ज्ञानं
 निरुक्त्यवस्थान विनिश्चितार्थम्।
सर्वैष्वनर्थान सदा विवर्जनम्
 एवं जिनो देशयि धर्मस्वामी ॥ ८३ ॥
संसेवता सत्पुरुषेहि नित्यं
 विवर्जना कापुरुषान चैव।
जिने प्रसादं सद प्रेमतां च
 एवं जिनो देशयि धर्म श्रेष्ठम् ॥ ८४ ॥
संकेतप्रज्ञप्तिव्याहारतां च
 संसारदुःखानि सदा विवर्जना।
अलाभि लाभे च असंक्तभाव-
 मेवं जिनो देशयि धर्ममुत्तमम् ॥ ८५ ॥
सत्कार लब्ध्वा च न विस्मयेय्या N 242
 असत्कृतश्चापि भवेदुपेक्षकः।
मूर्तेऽपि वर्णं न कदाचि मोदिये
 इय देशना लोकहितस्य ईदृशी ॥ ८६ ॥

१ A हिरिं च ओत्राप्यु सवासना चोत् for the line. २ A असक्तभावना for °भावम्.

अप्रत्यया अपगतप्रत्यया च
  यो एक निर्देशु भवे गतीनाम ॥ ५६ ॥

या सर्वधर्माण स्वभावमुद्रा
  यः सूत्रकोटीनियुतान आगमः ।
यो बोधिसत्वान धनं निरुत्तरं
  कच्चिज्जिनो भाषति तं समाधिम् ॥ ५७ ॥

N 235 कायस्य शुद्धी तथ वाच शुद्धी
  चित्तस्य शुद्धिस्तथ दृष्टिशुद्धिः ।
आरम्बणानां समतिक्रमो यः
  कच्चिज्जिनो भाषति तं समाधिम् ॥ ५८ ॥

अविप्रणाशः फलधर्मदर्शनं
  अष्टाङ्गिको मार्गवरस्य भावना ।
तथागतैः संगमु तीक्ष्णप्रज्ञता
  सत्यप्रवेशः सद धर्मज्ञानम् ॥ ५९ ॥

स्कन्धपरिज्ञा समता च धातुना-
  मपकर्षणं चायतनान सर्वशः ।
अनुत्पाद साक्षात्क्रियथावतारः
  कच्चिज्जिनो भाषति तं समाधिम् ॥ ६० ॥

प्रतिसंविदा शान्त्यवतारज्ञानं
  सर्वाक्षराणां च प्रभेदज्ञानम् ।
वस्तुनिवेशसमतिक्रमो यः
  कच्चिज्जिनो भाषति तं समाधिम् ॥ ६१ ॥

घोषः परिज्ञाय प्रामोद्यलाभः
  प्रीतिश्च मोती सुगतान वर्णम् ।
N 236 आर्या गतिर्मार्दवता च उज्जुका
  कच्चिज्जिनो भाषति तं समाधिम् ॥ ६२ ॥

ना जातु कुर्याद्भृकुटिं स सूरत
  सारिल्य माधुर्य स्मितं मुखं च ।
दृष्ट्वा च सत्वान् प्रथमालपेति
  कच्चिज्जिनो भाषति तं समाधिम् ॥ ६३ ॥

१ A om. sts 58–61. २ A प्रपलायसभः for प्रमोद्य°. ३ BC सुगतस्य for सुगतान. ४ A सर्वान् for सत्वान्.

अनालस्यता गौरवता गुरूणां
शुश्रूषणा वन्दन प्रेमदर्शना ।
उपपत्ति संतुष्टित शुक्लता च
कश्चिज्जिनो भाषति तं समाधिम् ॥ ६४ ॥

आजीवशुद्धिस्तथ रण्यवासो
धूते स्थितानुस्मृतेरप्रमोषः ।
स्कन्धेषु कौशल्यमथापि धातुषु
कश्चिज्जिनो भाषति तं समाधिम् ॥ ६५ ॥

आयतनकौशल्यमभिज्ञज्ञानं N 237
क्लिेशे-अपकर्षण दान्तभूमि ।
पृथुसर्वमन्त्राणमसाचुच्छेदः
कश्चिज्जिनो भाषति तं समाधिम् ॥ ६६ ॥

समतिक्रमः सर्वमकगतीना
जातिस्मृति धर्मनिष्काङ्क्षता च ।
धर्मे च नित्यं श्रुत एषणा च
कश्चिज्जिनो भाषति तं समाधिम् ॥ ६७ ॥

विशेषगामी सद भावनारति
आपत्ति कौशल्यत नि सृतौ स्थित. ।
यत्र स्थितोऽलुशयिता जहाति
कश्चिज्जिनो भाषति तं समाधिम् ॥ ६८ ॥

तीक्ष्णस्य ज्ञानस्य वरागमो यतो
अचालियो शैलसमो अकंम्पित ।
अनिर्वर्तितालक्षण धारणीमुखं
कश्चिज्जिनो भाषति त समाधिम् ॥ ६९ ॥

शुक्लान धर्माण सदा गवेषणा N 238
पापान धर्माण सदा विवर्जना ।
संक्लेशपक्षस्य सदा प्रचारु यो
कश्चिज्जिनो भाषति तं समाधिम् ॥ ७० ॥

सर्वासु शिक्षासु गतिंगतो विदुः
समाध्यवस्थानगतिंगतश्च ।

---

१ A दर्शन for वन्दन  २ A B क्लिेशापकर्षण दान्तभूमि for the line  ३ A अचालितो for °लियो. ४ A B अकम्पियः for °म्पित.

सत्वान चो आशयु ज्ञात्व चोदको
देशेति धर्मं वरबुद्धबोधौ ॥ ७१ ॥

विशेषज्ञानं उपपत्तिज्ञानं
अनन्तज्ञानं सुसमाप्तज्ञानम् ।
सर्वगतीनां प्रतिसंधिज्ञानं
कचिज्जिनो भापति तं समाधिम् ॥ ७२ ॥

गृहान् समुत्सृज्य प्रव्रज्यचित्तं
त्रैधातुके अनभिरती नानुग्रहः ।
चित्तस्य संप्रग्रहणं सहर्षणा
देशेति धर्मं द्विपदानमुत्तमः ॥ ७३ ॥

धर्मेषु चो नाभिनिवेश तायि
परिग्रहो धर्मवरे सदा च ।
N 230 कर्मविपाके च दृढाधिमुक्तिं
देशेति धर्मं द्विपदानमुत्तमः ॥ ७४ ॥

विनेयस्मि कौशल्य विपाकज्ञानं
कलहं विवादान तथोपशान्तिः ।
अविग्रहं चाप्यविवादभूमिं
देशेति धर्मं द्विपदानमुत्तमः ॥ ७५ ॥

क्षान्तीसमादानमक्रोधस्थानं
विनिश्चये धर्मि सदा च कौशलम् ।
पदप्रभेदेषु च ज्ञानदर्शनं
देशेति धर्मं करुणां जनेत्वा ॥ ७६ ॥

पूर्वान्तज्ञानमपरान्तज्ञानं
त्रियध्वसमता सुगतान शासने ।
परिच्छेद उक्तः स त्रिमण्डलस्य
एवं जिनो देशयि धर्मस्वामी ॥ ७७ ॥

चित्तव्यवस्थान एकाग्रता च
कायव्यवस्थान यथार्थभूमिः ।
N 210 ईर्यापथस्यो सद कालि रक्षणा
देशेति धर्मं पुरुषर्षभो मुनिः ॥ ७८ ॥

१ B सुसमाधिज्ञानम् for सुसमाप्त°. २ A B गृहवासमुत्सृज्य for गृहान् समुत्सृत्य. ३ A om. कर्मविपाके च. ४ AB विनयस्य for °यस्मि. ५ AB धर्मदेशनां for धर्मस्वामी. ६ A °स्थानमभेद्यता for °स्थान एकाग्रता. ७ A रक्षणा for रक्षणा.

हिरिश्च ओत्राप्यु प्रासादिकं च
*युक्तां गिरं भाषति लोकनाथम् ।*
प्रवृत्तिधर्मे प्रकृतिं च प्राणिनां
देशेति धर्मे वरबोधिमक्ष्याम् ॥ ७९ ॥

अनुग्रहं चो हिरिमोत्राप्यं च
चित्तस्य चाकुशलता जुगुप्सना ।
धूतस्यानुत्सर्गत पिण्डचर्या
देशेति धर्मे द्विपदानमुत्तमः ॥ ८० ॥

हिरिश्च ओत्राप्यु सदाचरेता
गुरूणामभिवादन प्रत्युत्थानम् ।
मानस्य चो निग्रह आदितैव
एवं जिनो देशयि धर्मस्वामी ॥ ८१ ॥

चित्तसमुत्थानत चित्तकल्पता N 241
ज्ञानप्रतीवेधु तथानुबोधम् ।
अज्ञानपक्षस्य सदा विवर्जना
देशेति धर्मान् वरबुद्धबोधिम् ॥ ८२ ॥

चित्तप्रवेशं च रुतस्य ज्ञानं
निरुक्तयवस्थान विनिश्चितार्थम् ।
सर्वेष्वनर्थान सदा विवर्जनम्
एवं जिनो देशयि धर्मस्वामी ॥ ८३ ॥

ससङ्गता सत्पुरुषेहि नित्यं
विवर्जना कापुरुषान चैव ।
जिने प्रसादं सद प्रेमतां च
एवं जिनो देशयि धर्म श्रेष्ठम् ॥ ८४ ॥

संचेतप्रज्ञप्तिव्याहारतां च
संसारदुःखानि सदा विवर्जना ।
अलाभि लाभे च असंक्तभाव-
मेवं जिनो देशयि धर्ममुत्तमम् ॥ ८५ ॥

सत्कारु लब्ध्वा च न विस्मयेय्या N 242
असत्कृतश्चापि भवेदुपेक्षकः ।
मूतेऽपि वर्णे न कदाचि मोदिये
इय देशना लोकहितस्य ईदृशी ॥ ८६ ॥

---

1 A हिरि च ओत्राप्यु सवासना चरेत् for the line. २ A असक्तभावना for °भावम्.

शीलस्य द्वारम्भि मार्गभावना
प्रतिपत्ति-ओवाद-नयथ भद्रको ।
अनुशासनी अत्र चरित्व शासनी
इयं जिने ईदृश आनुशासनी ॥ १०२ ॥

अनुलोमिकी क्षान्ति य बुद्धवर्णिता
क्षान्तिस्थितो दोष विवर्जयेत ।
अज्ञान वर्जेय्य स्थिहित्व ज्ञाने
इयं जिने ईदृश आनुशासनी ॥ १०३ ॥

ज्ञानप्रतिष्ठा तथ योगभूमी
योगेश्वरी बोधयि प्रस्थितानाम् ।
निषेवणा सत्पुरुषाण नित्यं
इयं जिने ईदृश आनुशासनी ॥ १०४ ॥

अयुक्तयोगीन सदा विवर्जना
तथागतैर्भाषित बुद्धभूमि ।
अनुमोदिता सर्विहि पण्डितेहि
इयं जिने ईदृश आनुशासनी ॥ १०५ ॥

N 247 बालैः प्रतिक्षिप्त अज्ञातकेहि
अभूमिरत्र पृथुश्रावकाणाम् ।
परिगृहीताः सद बोधिसत्त्वैः
इयं जिने ईदृश आनुशासनी ॥ १०६ ॥

तथागतेहि अनुबुद्धमेतं
देवेहि चो सत्कृतु पूजितं च ।
अनुमोदितं ब्रह्मसहस्रकोटिभिः
कच्चिज्जिनो भाषति तं समाधिम् ॥ १०७ ॥

नागसहस्रेहि सदा सुसत्कृतो
सुपर्णयक्षेहि च नित्यमेहि ।
या भाषिता बोधिवरा जिनेभिः
कच्चिज्जिनो भाषति तं समाधिम् ॥ १०८ ॥

पर्याप्त या नित्यु सुपण्डितेहि
धनं च श्रेष्ठं प्रवरं सुलभ्यम् ।

१ A om. st. 102 d and 103 a. २ A B om. st. 104. ३ A अज्ञानतेहि for अज्ञात°. ४ A नमस्कृते for सुसत्कृते.

निरामिषं ज्ञान चिकित्स उत्तमा
यच्चिजिनो भाषति तं समाधिम् ॥ १०९ ॥
ज्ञानस्य कोषः प्रतिभानमक्षयं N 248
सूत्रान्तकोटीन प्रवेश एषः ।
परिज्ञ त्रैधातुकि भूतज्ञानं
यच्चिजिनो भाषति तं समाधिम् ॥ ११० ॥
नौका इयं देशित पारगामिनां
नावा पि चो ओघगतान एषा ।
कीर्तियशो वर्धति वर्णमाला
येषामयं शान्त समाधि देशितः ॥ १११ ॥
प्रशंस एषा च तथागतानां
स्तवश्च एषो पुरुषर्षभाणाम् ।
स्तव बोधिसत्त्वान नयश्च अक्षयो
येही अयं शान्त समाधि देशितः ॥ ११२ ॥
मैत्री इयं दोषशमे प्रकाशिता
उपेक्षियं कारुणिकान भूमिः ।
आश्वासयन्त्येष महाशयानां
येषां कृतेनैष समाधि भाषितः ॥ ११३ ॥
प्रतिपत्तियं देशित सिंहनादिना- N 249
मिदु बुद्धज्ञानस्य वरस्य आगमः ।
सर्वेष धर्माण स्वभावमुद्राः
समाध्ययं देशितु नायकेहि ॥ ११४ ॥
सर्वज्ञज्ञानस्य च आहरित्रिमा
चर्या इयं बोधयि प्रस्थितानाम् ।
वित्रासनं मारचमूय चापि
समाध्ययं शान्त जिनेन देशितः ॥ ११५ ॥
त्रिधा इयं धर्मस्थितान तायिनां
अमित्रमध्ये परमा च रक्षा ।
प्रत्यर्थिकानां सहधर्मनिग्रहः
समाध्ययं शान्त जिनेन देशितः ॥ ११६ ॥

१ C भवति for वर्धति. २ After st. 115, C adds:
अनुबुद्धज्ञानस्य वरस्य आगमो सर्वेण धर्मान स्वभावमुद्रा ।
अनुत्पाद शान्त वरधर्ममुद्रा समाध्ययं देशित नायकेन ॥
३ B गापिता; T seems to support भाषिता against A and C.

प्रतिभानभूमी इय संप्रकाशिता
बला विमोक्षा तथ इन्द्रियाणि ।
विशिष्ट अष्टादश बुद्धधर्माः
II 250 समाधि शान्तेम निषेवमाणाः ॥ ११७ ॥
दशान पर्येष्टि बलान भूता
पूर्वनिमित्तं पि च बुद्धज्ञाने ।
ये बुद्धधर्माः पुरुषोत्तमेन
प्रकाशिता लोकहितानुकम्पिना ॥ ११८ ॥
बुद्धान पुत्रेभिरयं प्रतीहितो
विमोक्षकामानयु मार्गु देशितः ।
प्रीतिश्च तस्मिन् सुगतात्मजानां
श्रुणित्विमं शान्त समाधि दुर्दृशम् ॥ ११९ ॥
या बुद्धज्ञानस्य च पारिपूरिता
यामेषते पण्डितु बोधिसत्त्वः ।
विशुद्धचित्तश्च शुचिर्निरङ्गणो
इमं निषेवेत समाधि शान्तम् ॥ १२० ॥
परिशुद्ध कायोऽस्य यथा जिनान
विमोक्षज्ञानं च विमुक्तिदर्शनम् ।
असंक्लिष्टः सद रागबन्धनैः
इमं निषेवेत समाधि भद्रकम् ॥ १२१ ॥
II 251 अभूमि दोषे विगमश्च मोहे
ज्ञानस्य चो आगमु मुक्तिमिच्छतः ।
विद्याय उत्पादु अविद्यनाशकम्
इमं निषेवेत समाधि शान्तम् ॥ १२२ ॥
विमुक्तिसाराणिय तृप्ति भाषिता
ध्यायीनयं शान्त समाधि देशितः ।
चक्षुश्च बुद्धानमनिन्दिताना-[1]
मिमं निषेवेत समाधि शान्तम् ॥ १२३ ॥
अभिज्ञ एषा बहुक्षेत्रे दर्शिता
ऋद्धिश्च बुद्धान अनन्त दर्शिता ।
या धारणी सापि ततो न दुर्लभा
निषेवमाणस्य समाधिमेनम् ॥ १२४ ॥

---

1 B मनीन्द्रियाणां for अनिन्दितानाम्.

शान्तेन्द्रियस्यो इह स्यातु बोधये
  इदमधिष्ठानमनन्तदर्शितम् ।
सूक्ष्मं च ज्ञानं विपुलं विशुद्धं   N 252
  निषेवमाणस्य इमं समाधिम् ॥ १२५ ॥

न बुध्यते नैव अयुक्तयोगै-
  र्विवर्तने सर्वसु अक्षराणाम् ।
न शक्यु घोषेण विजानानाय
  येनो अयं शान्त समाधि न श्रुतः ॥ १२६ ॥

ज्ञातं तु विज्ञेयु बोधिसत्त्वै-
  र्यथा व यं देशितु धर्मस्वामिना ।
प्रतिबुद्ध शान्तेहि अनिन्दितेहि
  इमं समाधिं प्रतिषेवमाणैः ॥ १२७ ॥

आरब्धवीर्यैहि समुद्गृहीत-
  मुपस्थितं च सापि सदा सुधारितम् ।
दुःखक्षयो जातिनिरोधज्ञान-
  मिमं समाधिं प्रतिषेवमाणैः ॥ १२८ ॥

सर्वेष धर्माणमजाति भाषिता
  एवं च सर्वासु भवगतीषु ।
ज्ञानाय बुद्धान महाशयानां   N 253
  कश्चिज्जिनो भाषति तं समाधिम् ॥ १२९ ॥

तस्यो कुमारस्यिमि गाथ भाषतो
  अशीतिनियुतसहस्र पूर्णाः ।
घोषानुगा क्षान्ति लभिंसु तत्र
  अविवर्तिकाये स्थितु बुद्धज्ञाने ॥ १३० ॥

दृढवल्कस्तमवदी कुमार-
  मद्यापि सो तिष्ठति लोकनाथः ।
पृच्छामि त्वं दारक एतमर्थं
  कुतस्त्वया एष श्रुतः समाधिः ॥ १३१ ॥

कुमार राजन् अवदी शृणोहि
  दृष्टासि कोटीनियुतं जिनानाम् ।

१ A B अधिष्ठातु for इह स्यातु. २ A B समाधिमेताम् for इमं समाधिम्. ३ B संकाति for अजाति. ४ B महायत्नानां for °शयानां. ५ A B शुत्वा for भाषतो. ६ AB अवची for °अवदी.

अमत्सरी भोम्यहु नित्यकालं
त्यागस्य चो वर्ण सदा प्रभाषे।
आढ्यश्च भोमी धनवान् महात्मा
दुर्भिक्षकाले बहु भोमि दायकः ॥ १४८ ॥

ये भिक्षु धारेन्ति इमं समाधिं
ये चापि वाचेन्ति य उद्दिशन्ति।
करोमि तेषां अहु पारिचर्यां
सर्वे च भेष्यन्ति नराणमुत्तमाः ॥ १४९ ॥

कर्मणा तेनाहमनुत्तरेण
पश्यामि बुद्धान् बहु लोकनाथान्।
N 258 लभित्व प्रव्रज्य जिनानुशासने
भवामि नित्यं विदु धर्मभाणकः ॥ १५० ॥

धूताभियुक्तो अहु भोमि नित्यं
कान्तारमारण्य सदा निषेवी।
नाहारहेतोः कुहनां करोमि
संतुष्ट भोमी इतरेतरेण ॥ १५१ ॥

अनीर्षुको भोम्यहु नित्यकालं
कुलेषु चाहं न भवामि निश्रितः।
कुलेषु सक्तस्य हि ईर्ष्य वर्धते
अनीर्ष्युकस्तुष्टि वनेषु विन्दमि ॥ १५२ ॥

मैत्रीविहारी अहु भोमि नित्य-
माक्रुष्ट सन्ता न जनेमि क्रोधम्।
मैत्रीविहारिष्यमि सूरतस्य
चतुर्दिशं वर्धति वर्णमाल्य ॥ १५३ ॥

अल्पेच्छु संतुष्टु भवामि नित्य-
मारण्यकश्चैव धुताभियुक्तः।
N 259 न चोत्सृजामी अहु पिण्डपातं
इदं समाधान धुतेषु विन्दमि ॥ १५४ ॥

श्राद्धश्च भोमी मनसः प्रसादो
बहुप्रसादः सद बुद्धशासने।

---

१ A C तस्मि काले for नित्यकालं. २ A [illegible] बहु for अहु. ३ A B धर्मेण, C स कर्मणा for कर्मणा। ४ A B प्रेमीम् for क्रोधम्. ५ A B सद सप्रसादे for मनसः प्रसादो.

प्रसाद बहु लप्स्यमि आनुशंसा
    प्रासादिको भोमि अहीनइन्द्रियः ॥ १५५ ॥
यथैव भाषाम्यहु तत्र तिष्ठे
    प्रतिपत्तिसारो अहु नित्यु[1] भोमि ।
प्रतिपत्तिसारस्यिमि देवनागाः
    कुर्वन्त्युपस्थानु प्रसन्नचित्ताः ॥ १५६ ॥
गुणा इमे कीर्तित यावता मे
    एते च अन्ये च बहू अनेके ।
ये शिक्षितव्याः सद पण्डितेन
    यो इच्छती बुध्यितु बुद्धबोधिम् ॥ १५७ ॥
स्मराम्यतो बहुलकु दुष्कराणि
    ये पूर्वकल्पे चरितान्यनेके ।
बहु पि दानीं भणितु न शक्यं
    गच्छामि तावत् सुगतस्य अन्तिकम् ॥ १५८ ॥
सुतीक्ष्णप्रज्ञो विदु बोधिसत्त्वो N 260
    तस्मिन् क्षणे स्पर्शयि पञ्चभिज्ञा ।
ऋद्धीय सो गच्छि जिनस्य अन्तिके[2]
    स प्राणिकोटीभिरशीतिभिः सह ॥ १५९ ॥
दृढबलो पश्चु उदग्र आसीत्
    सार्धं तदा कोटिशतेहि षष्टिभिः ।
उपसंक्रमी मूलु तथागतस्य
    वन्दित्व पादौ पुरतो न्यषीदत् ॥ १६० ॥
अध्याशयं तस्य विदित्व राज्ञो
    इमं समाधिं द्विपदेन्द्र देशयि ।
श्रुत्वा च सो पार्थिविमं समाधिं
    उज्झित्व राज्यं निरपेक्षु प्रव्रजी ॥ १६१ ॥
स प्रव्रजित्वान इमं समाधिं
    भावेति वाचेति प्रकाशयेति ।
स षष्टिभिः कल्पसहस्र पश्चात्
    यशोत्तरो[3] नाम जिनो अभूषि ॥ १६२ ॥
षष्टिस्तदा कोटिशत अनूनका N 261
    ये राज्ञ सार्धं उपसंक्रमी जिनान् ।

१ A B भोमि नित्यम् for नित्यु भोमि. २ A B अन्तिकम् for अन्तिके. ३ B यशोत्तमो for °त्तरो.

परम प्रियु मनापु पण्डितानां
भविष्यति चार्थपदं प्रभाषमाणः ।
N 265 ज्ञातु बहुजनस्य प्रज्ञवन्तो
इमु वरु शान्त समाधि भाषमाणः ॥ ७ ॥
लाभि परम श्रेष्ठ चीवराणां
शय्य[1] निमन्त्रणमा(खा?)द्यभोजनानाम् ।
भविष्यति सुकुमार दर्शनीयो
इमु वरु शान्त समाधि धारयन्तो[2] ॥ ८ ॥
द्रक्ष्यति बहु बुद्ध लोकनाथान्
अतुलिय काहिति पूज नायकानाम् ।
न च भविष्यति तस्य अन्तरायो
इमु वरु शान्त समाधिमेषन्तो हि ॥ ९ ॥
भाषिष्यति[3] पुरतः स्थित्व लोकनाथान्
सुरुचिर गाथशतेहि तुष्टचित्तः ।
न च भविष्यति तस्य जातु हानी
इमु वरु शान्त समाधि धारयित्वा ॥ १० ॥
स्थास्यति पुरतोऽस्य लोकनाथः
सुरुचिर लक्षण-कायु व्यञ्जनेभिः ।
न च भविष्यति तस्य ज्ञानहानी
इमु वरु शान्त समाधि धारयित्वा ॥ ११ ॥
N 266 न कदाचि भविष्यति दीनचित्तः
सतत भविष्यति आढ्यु नो दरिद्र ।
न च भविष्यति सङ्कृहीतचित्तो
इमु वरु शान्त समाधि धारयित्वा ॥ १२ ॥
न च भविष्यति[4] वा क्षणेषु
महीपति भेष्यति राजचक्रवर्ती ।
सद भविष्यति राज्य तस्य क्षेमं
इमु वरु शान्त समाधि धारयित्वा ॥ १३ ॥
ज्ञातु विपुल नात्र संशयोऽस्ति
क्षपयितु कल्पशतेहि भाषमाणे[5] ।

---

१ B om. the line. २ A भावयित्वा for धारयन्तो. ३ Mss. भविष्यति; T supports our reading ४ B व्यपगच्छति for भविष्यति ५ A B (wrongly) भाषमाण

